संस्कृत प्रचार पुस्तक माला सं० १२

# कौत्सस्य गुरुदक्षिणा

( एकांकिनाटकम् )

लेखकः—

श्री वासुदेव द्विवेदी शास्त्री

( संस्कृत-प्रचार-पुस्तकमाला-सम्पादकः )






सार्वभौम संस्कृत-प्रचार-कार्यालयः

वाराणसी

# आवश्यक निवेदन

यह पुस्तक संस्कृतभाषाका एक एकांकी नाटक है। आजकल हिन्दी-संस्कृतकी पाठशालाओं तथा स्कूल-कालेजोंका जब वार्षिकोत्सव होता है तो वहाँके संस्कृत-प्रेमी अध्यापक तथा विद्यार्थी हिन्दी आदि भाषाओंके एकांकी नाटकोंके साथ संस्कृत का भी कोई एकांकी नाटक खेलना चाहते हैं, परन्तु संस्कृतमें आधुनिक ढंग के अभिनव एकांकी नाटकों के न होनेके कारण उनका मनोरथ पूरा नहीं होता और यह अभाव उनके लिये बहुत ही क्लेशकर होता है। इसी अभावको दूर करने के लिये यह एक अभिनव एकांकी नाटक प्रकाशित किया जा रहा है। इस प्रकारके छोटे-बड़े और भी अनेक एकांकी नाटक लिखे गये हैं जो शीघ्र ही प्रकाशित किये जायेंगे।

इस नाटककी कथावस्तुका सम्बन्ध प्राचीन कालकी शिक्षा-पद्धति तथा गुरु-शिष्यकी आदर्श परम्परागत मर्यादासे है। अतः यह नाटक शिक्षा-संस्थाओंके लिये विशेष उपयोगी है। माध्यमिक तथा महाविद्यालयोंके संस्कृत-प्रेमी अध्यापकों एवं विद्यार्थियोंसे हमारी विनीत प्रार्थना है कि वे अपने विद्यालयोंके आयोजनोंमें इस नाटकका संगीत एवं प्रहसन के साथ अभिनय कर संस्कृत-प्रचार में सहयोग देनेकी कृपा करें।

२० फरवरी
१९८३

विनीत—**लेखक**

# कौत्सस्य गुरुदक्षिणा

## सामूहिकगानम्

जय मृत्युञ्जय देव पुरारे !
निगम-गमित विपदेकनिवारण !
मदन-मथन कलिकलुष-विदारण !
प्रणतभुवन गिरिजेश गजारे ! जय०...

शशिमण्डन भव-भव-भय-खण्डन !
मोदसदन हर दुरितविकण्डन !
गङ्गाधर भूतेश यमारे ! जय०...

श्रुतिरपि ते न गुणौघमनन्तम्,
गणयति को नु वेद भगवन्तम्;
निटिलनयन वचसामपि पारे । जय...

( सूत्रधारः प्रविशति )

सूत्रधारः—अहो ! सर्वतोऽपि सुसज्जितेयं सम्पन्ना परिषत् । दर्शक-
समुदायश्च संस्कृतनाटकमिति कृत्वा अतिशयेन समुत्सुको दृश्यते । तत्
प्रियवयस्यं रङ्गशेखरं आहूय झटिति अभिनयारम्भाय प्रेरयामि ।
( नेपथ्याभिमुखमवलोक्य ) सखे रङ्गशेखर !

रङ्गशेखरः—ननु उपस्थित एवास्मि । तदादिश्यताम् आवश्यकः
कार्यकलापः ।

सूत्रधारः—भवान् जानात्येव यदद्य खलु श्रीमदनमोहन मालवीय महाविद्यालस्य संस्कृतपरिषदा समस्तेऽपि देवरिया-जनपदे विद्यमानानां संस्कृतपरिषदाम् एकत्र सम्मेलनस्य इयं मङ्गलमयी आयोजना विहिता वर्तते* । तदेतस्मिन् महनीहे महोत्सवे समागतानां सभ्यजनानां मनोविनोदाय वयं सुरभारतीप्रचारैकव्रतिभिः श्रीवासुदेवशास्त्रिभिः प्रणीतं "गुरुदक्षिणा" नामकमेकं अभिनवमेकांकिनाटकम् अभिनेतुकामाः स्म । तद् यथाशीघ्रं आदिश्यताम् अभिनयारम्भाय ।

रङ्गशेखरः—उचितमेवाह भवान् । अथ च पथिकानां यथा धूमशकटे तथा दर्शकानां नाटके क्रियमाणो विलम्बः नितान्तमसहनीयो भवति । तदागम्यताम् । अविलम्बितमेव पात्रप्रवेशाय प्रयतावहे । ( उभौ निष्क्रान्तौ ) ।

## प्रथमं दृश्यम्

( स्थानम्—महर्षिवरतन्तोराश्रमः । अध्यापनकुटीरे स्वाध्यायनिरत उपाध्यायो विराजते । ब्रह्मचारिण आगत्य उपाध्यायं च पादयोः प्रणम्य अध्ययनार्थमुपविशन्ति ।

उपाध्यायः—अपि सर्वे उपस्थिताः ?

ब्रह्मचारिणः—सर्वे उपस्थिताः ।

उपाध्यायः—तर्हि शान्तिपाठः प्रारभ्यताम् ।

( ब्रह्मचारिणः शान्तिपाठं कुर्वन्ति )

ॐ शं नो मित्रः शं वरुणः । शं नो भवत्वर्यमा ।
शं न इन्द्रो बृहस्पतिः । शं नो विष्णुरुरुक्रमः ।
नमो ब्रह्मणे । नमस्ते वायो । त्वमेव प्रत्यक्षं ब्रह्मासि ।
त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि । ऋतं वदिष्यामि ।

---

* रेखाङ्कितः अंशः यथेच्छं परिवर्तनीयः ।

सत्यं वदिष्यामि। तन्मामवतु तद् वक्तारमवतु।
अवतु माम्। अवतु वक्तारम्। ॐ शान्तिः शान्तिः शान्तिः!

उपाध्यायः—अथ गतदिनस्य सर्वे पाठाः कण्ठस्थीकृताः ?

ब्रह्मचारिणः—आम्, सर्वे पाठाः कण्ठस्थीकृताः।

उपाध्यायः—अर्थोऽपि अवगतः ?

ब्रह्मचारिणः—आम्, अर्थोऽपि अवगतः।

उपाध्यायः—किंचित् पृच्छामि ?

ब्रह्मचारिणः—(साञ्जलिबन्धम्) यथेच्छं पृच्छयताम्। यथाशक्ति उत्तरं दास्यामः।

उपाध्यायः—(प्रथमं ब्रह्मचारिणं प्रति) त्वं गतदिनस्य पद्यं श्रावय।

प्रथमब्रह्मचारी

माता शत्रुः पिता वैरी येन बालो न पाठितः।
न शोभते सभामध्ये हंसमध्ये वको यथा॥

उपाध्यायः—( द्वितीयं ब्रह्मचारिणं प्रति ) अस्मिन् श्लोके कति पदानि सन्ति ? कथयिष्यसि ?

द्वितीयब्रह्मचारी—अवश्यं कथयिष्यामि। अस्मिन् श्लोके माता इति प्रथमं पदम्, शत्रुः इति द्वितीयं पदम्, पिता इति तृतीयं पदम्, वैरी इति चतुर्थं पदम्, येन इति पञ्चमं पदम्, बालः इति षष्ठं पदम्, न इति सप्तमं पदम्, पाठितः इति अष्टमं पदम्, पुनः न इति नवमं पदम्, शोभते इति दशमं पदम्, सभामध्ये इति एकादशं पदम्, हंसमध्ये इति द्वादशं पदम्, वकः इति त्रयोदशं पदम्, यथा इति चतुर्दशं पदम्, एवं च अस्मिन् श्लोके चतुर्दश पदानि भवन्ति।

उपाध्यायः—अस्मिन् श्लोके तु "बालो बको" इति पदं वर्तते। त्वं तु बालः वकः इति कथयसि, इदं कथम् ?

ब्रह्मचारी—गुरो, अत्र विसर्गसन्धिकारणात् बालो वको इति जातम् । वस्तुतस्तु बालः वकः इत्येव पदं वर्तते ।

उपाध्यायः—साधु ! (तृतीयं ब्रह्मचारिणं प्रति) त्वं एतेषां पदानां विभक्तिपरिचयं दास्यसि ?

तृतीयब्रह्मचारी—दातुं शक्नोमि ।

उपाध्यायः—कथ्यताम्, माता पिता इति पदद्वयस्य कः परिचयः ?

ब्रह्मचारी—माता इति ऋकारान्तस्य स्त्रीलिङ्गस्य मातृशब्दस्य प्रथमाया एकवचने रूपम् । पिता इति ऋकारान्तस्य पुंलिङ्गस्य पितृ-शब्दस्य प्रथमाया एकवचने रूपम् ।

उपाध्यायः—( चतुर्थं ब्रह्मचारिणं प्रति ) त्वं वद, पाठितः इति पदस्य कः परिचयः ?

चतुर्थब्रह्मचारी—पाठित इति प्रेरणार्थक-णिच्-प्रत्ययान्तस्य पठ धातोः भूतकालवाचिनि क्तप्रत्यये प्रथमाया एकवचने रूपम् ।

उपाध्यायः—कस्मिन् लिङ्गे इदं रूपं वर्तते ?

ब्रह्मचारी—पुंलिङ्गे इदं रूपं वर्तते । यतो हि बालः इति पुंलिङ्ग-पदस्य इदं विशेषणं वर्तते ।

उपाध्यायः—साधु ( पञ्चमं ब्रह्मचारिणं प्रति ) त्वं कथयिष्यसि ? हंसमध्ये वकः कथं न शोभते ? किं कारणम् अस्ति । अपि वको हंसश्च दृष्टौ त्वया ?

पंचमः ब्रह्मचारी—गुरो, वकस्तु दृष्टो मया, परं हंसो न दृष्टः ।

षष्ठः ब्रह्मचारी—गुरो ! मया तु हंसा अपि दृष्टाः । हंसाः खलु स्वरूपेण स्वभावेन च वकापेक्षया अधिकं शोभनाः सुरूपाः गंभीराश्च दृश्यन्ते । अतएव तेषां मध्ये वकानां शोभा न भवितुमर्हति ।

उपाध्यायः—साधु उक्तं त्वया । अतः युष्माभिरपि तथा पठनीयं यथा सभामध्ये युष्माकं शोभा भवेत् । अस्तु तावत् । अद्य अत्रैव पाठः समाप्यते । शान्तिपाठं पठित्वा स्वस्थानं गच्छत ।

( छात्राः शान्तिपाठं पठन्ति )

ॐ सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्वि नावधीतमस्तु । मा विद्विषावहै ।

ॐ शान्तिः ! शान्तिः !! शान्तिः !!

द्वितीयं दृश्यम्

( महर्षि—वरतन्तुः स्वकुटीरे सशिष्यः स्वाध्यायमग्नो विराजते ।
( ततो ब्रह्मचारी कौत्सः प्रविशति )

कौत्सः—( स्वगतम् ) ननु समापिता मया साङ्गाः सरहस्याश्च चत्वारो वेदाः । इदानीञ्च गृहस्थाश्रमे प्रवेशाय पूज्यपादैः गुरुवर्यैरादिष्टोऽस्मि । अतो मया सम्प्रति शास्त्रानुसारं गुरुदक्षिणां दत्वा गेहं प्रति प्रस्थातव्यम् । तदिदानीं गत्वा पूज्यपादाः गुरुदक्षिणायै प्रार्थनीया इति । ( ततः कौत्सः गुरुसमीपे गच्छति । निम्नलिखितश्लोकौ पठित्वा गुरुपादयोः प्रणमति ) ।

गुरुर्ब्रह्मा गुरुर्विष्णुः गुरुर्देवो महेश्वरः ।
गुरुः साक्षात् पर ब्रह्म तस्मै श्रीगुरवे नमः ॥
अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया ।
चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ॥

वरतन्तुः—आयुष्मान् भव वत्स । अपि प्रसन्नोऽसि ?

कौत्सः—पूज्यपादाः ! श्रीमतामनुग्रहेण कुतो विषादलेशस्यापि अवकाशोऽस्मासु । सर्वथाऽपि मोदमानाः तिष्ठामः । परन्तु अद्य किमपि विशेष-निवेदनीयं वर्तते, यदर्थं गुरुपादानामन्तिके समुपागतोऽस्मि ।

वरतन्तुः—वत्स ! कथय, विश्रब्धं कथय । निश्शङ्कं निवेदय मनोगतमभिप्रायम् ।

कौत्सः—गुरुवर्याः ! अत्र ऋषिकुले निवसतो मम विंशतिर्वर्षाणि व्यतीतानि । एतस्मिन्नन्तरे चतुर्दशसु अपि विद्यासु सम्यग् निपुणतां नीता वयं श्रीमद्भिः । श्रीमतां कृपया शारीरिकी बौद्धिकी आध्यात्मिकी चेति सर्वविधा अपि समुन्नतिः समासादिता अस्माभिः । अतो न केवलं अस्मिन्नेव जन्मनि, परं जन्मान्तरेऽपि न वयमस्मात् ऋणात् अनृणा भवितुं शक्नुमः ।

तथापि साम्प्रतं समावर्तनावसरे शास्त्रानुसारं काञ्चिद् गुरुदक्षिणां चरणेषु समर्पयितुमिच्छामि । तदिमां विनीतप्रार्थनाम् अङ्गीकृत्य अनुगृहीतव्योऽस्मि पूज्यपादैः ।

वरतन्तुः—वत्स कौत्स ! सर्वथा शास्त्रानुकूलमेव तव निवेदनमिदम् । तथापि ब्रह्मचर्यव्रते निवसता त्वया अद्यावधि या कायमनोवचनैर्निरन्तरं सेवा कृता तयैव अहं बाढं प्रसन्नोऽस्मि । न ततः परं गुरुदक्षिणायाः किमपि विशेषमहत्त्वमहं मन्ये । तत् निःसङ्कोचं गृहं गच्छ ।

कौत्सः—गुरुदेव ! गुरुसेवा तु अस्माकं दैनिकं कर्त्तव्यमात्रमस्ति । सा कथं दक्षिणास्थानीया भवितुमर्हति ?

वरतन्तुः—पुत्र ! तव भक्त्या एव अहं बाढं परितुष्टमानसोऽस्मि । अलं गुरुदक्षिणाविषयकेण वार्तालापेन ।

कौत्सः—महर्षिवर्य ! परं न एतावता मम हृदयस्य परितोषो भवति । गुरुदक्षिणां दत्वैव इतो गृहं गन्तुमिच्छामि ।

वरतन्तुः—परं कौत्स ! नहि इयं हठवादिता शोभते तुभ्यम् । कथं नाम अद्यावधि आदेशपालनं विधाय अन्ते तदुल्लङ्घनाय बद्धपरिकरो जातोऽसि ?

कौत्सः—गुरो ! नेयं हठवादिता । इयन्तु धर्मशास्त्रकाराणामाज्ञा अस्ति, गुरुशिष्ययोश्च भारतीय-परम्परागता मर्यादा अस्ति । तत् किमिति पुनः पुनः प्रार्थनयाऽपि निवेदनमिदं नाङ्गीक्रियते पूज्यपादैः ?

वरतन्तुः—( सक्रोधम् ) अस्तु नाम । यदि ते दक्षिणां दातुम् एतावान् आग्रहो वर्तते तर्हि गच्छ, मया चतुर्दशविद्या अध्यापिताः, अतस्त्वं चतुर्दशकोटिमिताः स्वर्णमुद्रा आनय ।

कौत्सः—( विस्मयं नाटयन् ) बाढं, चतुर्दशकोटिमिताः स्वर्णमुद्रा आनेष्यामि । गुरुचरणानां कृपया किमपि असम्भवं नास्ति । नमो नमः श्रीगुरुचरणकमलेभ्यः । ( ततो निर्गत्य स्वगतम् )—

अहो ! कष्टलभ्या इयं गुरुदक्षिणाया मात्रा । चतुर्दशकोटिमिताः स्वर्णमुद्राः ! कुत्र गन्तव्यम् ? कुतश्च आनेतव्यम् ? ममैव हठस्य दुष्परिणामोऽयम् । गुरुवर्याणां तु धनस्य आवश्यकता नास्ति । ते तु सर्वथा निरीहा जीवन्मुक्ताश्च तपोधनाः महात्मानः सन्ति । परन्तु इयं केवलं मम परीक्षा अस्ति । अस्तु, परीक्षायाम् उत्तीर्णतायै तु अवश्यं प्रयतनीयमेव । अन्यथा मम अपयशो गुरुदेवानाञ्च अप्रसन्नता सुनिश्चितैव । तत् कुत्र गच्छामि ? आँ स्मृतम् । अस्ति इदानीम् अयोध्यायां निखिलमहीमण्डलविजेता महाराजो रघुर्नाम । स एव एतावत् धनं दातुं समर्थः । अतस्तत्रैव गन्तव्यं मया । ( इति निर्गच्छति कौत्सः ) ।

## तृतीयं दृश्यम्

( स्थानम्—राजसभा । सभायां महाराजो रघुः, कुलगुरुर्वशिष्ठः, मन्त्रिणः सभासदश्च समुपविष्टाः सन्ति )

रघुः—गुरुवर्य ! श्रीमतामनुग्रहेण सर्वथा सुसम्पन्नः खलु अस्माकं विश्वजिद् यज्ञः । तदहं सम्प्रति अस्य महतो यज्ञस्य सम्पूर्णतासिद्धये आत्मनः सम्पूर्णमपि धनं सम्पदं च प्रजाजने वितरीतुमिच्छामि । तदत्र यथासम्मतिर्भवेद् गुरुवर्याणाम् ।

वशिष्ठः—महाराज ! सर्वथा राजधर्मानुकूल एवायं भवतः सर्वस्वदानसंकल्पः । यथा पितुः सर्वस्यापि धनस्य पुत्रोऽधिकारी भवति तथैव राज्ञः सर्वस्यापि वैभवस्य अधिकारिणी जनता भवति । शास्त्रानुसारं राजा कररूपेण प्रजाभ्यो यद् धन गृह्णाति तदपि नात्मनः

सुखाय, प्रत्युत जनताया एव सुखाय गृह्यते । न केवलं धनं सम्पत्तिर्वा अपि तु शासकस्य शरीरमपि जनताया एव सेवायै भवतीति राजनीतिशास्त्राणां सिद्धान्तः । तदवश्यमेव महाराजेन आत्मनः सम्पूर्णमपि वैभवं प्रजाजने वितरणीयमिति मे सम्मतिः ।

रघुः—अनुगृहीतोऽस्मि । ( मन्त्रिणं प्रति ) अमात्यवर्य ! तद् गम्यतां विधीयतां च दानसम्बन्धिनी सुव्यवस्था ।

धनानि धनहीनेभ्यो निर्वृत्तिभ्यश्च वृत्तयः ।
भूमयो भूमिहीनेभ्यः प्रदीयन्तां यथेप्सितम् ॥

किमधिकं, मदीयं सुवर्णपात्रमपि यस्मै कस्मैचित् प्रदेयम् । अहं सम्प्रति मृत्तिकापात्रेणैव स्वकार्यं सञ्चालयितुमिच्छामि ।

मन्त्रीः—यथा आदेशो महाराजानाम् ( इति मन्त्रिणः निष्कान्ताः )

द्वारपालः—( ससंभ्रमं प्रविश्य ) जयतु-जयतु महाराजः । देव ! ननु भवद्दर्शनाभिलाषी कौत्साभिधेयः कश्चिद् ब्रह्मचारी द्वारे तिष्ठति । तद् यथा आदेशो देवस्य ।

रघुः—प्रवेशय, विश्रब्धं प्रवेशय ।

कौत्सः—( प्रविश्य दक्षिणं च हस्तमुत्थाप्य ) विजयतां महाराजः ।

रघुः—( आसनादुत्थाय मृत्तिकाया अर्घ्यपात्रं च गृहीत्वा ) स्वागतम्, स्वागतम्, ऋषिवर्येभ्यः स्वागतम् । ( आसने उपवेश्य ) अहो ! परमसौभाग्यं मे यदद्य ऋषिवर्याः स्वयमेव दर्शनप्रदानाय समुपस्थिताः । तत् कथ्यताम्, अपि कुशलिनः श्रीमन्तः, अपि सानन्दा भवतां तपोधना गुरुवर्याः ? कच्चित् निरामयाः सानन्दाश्च सर्वे आश्रमस्था ब्रह्मचारिणो, हरिणशावकाः तरुलतादयश्च ? अपि निर्विघ्नानि भवतां तपश्चरणानि ?

कौत्सः—महाराज ! भवादृशे धर्मात्मनि महाराजे महीं शासति कुतो नाम तपश्चर्यासु बाधा, कथञ्च आश्रमवासिनाम् अकुशलम् अकल्याणं वा ? किं दिवाकरे विद्योतमानेऽपि क्वचित् अन्धकारस्य प्रवेशः सम्भवति ?

रघुः—महर्षे ! यद्यपि वयं भवतामनेन पुण्यदर्शनेनैव नितरां कृतकृत्यतां गताः स्म । परन्तु यदि आगमनस्य किमपि विशेषप्रयोजनं स्यात् तर्हि तत्कथनेनापि अनुग्राह्या वयम् । भवदादेशपालनाय समुत्सुकमिवाभाति मे हृदयम् ।

कौत्सः—( किञ्चित् उदासीनतां प्रकटयन् ) महाराज ! वंशपरम्परागता भवतां तपस्विजनेषु भक्तिरियम् । अथ च अहं किमपि विशेषप्रयोजनमेव उद्दिश्य श्रीमतां समीपे आगत इदानीम् । परन्तु भवतां करकमलेषु मृण्मयमर्घ्यपात्रं दृष्ट्वा हतोत्साहतया नहि किमपि निवेदयितुं मे मानसं समुत्सहते । तदहं तावत् अन्यस्यैव वदान्यवरस्य सकाशात् स्वमनोरथं पूरयितुं प्रयतिष्ये ।

तदन्यतस्तावदनन्यकार्यो गुर्वर्थमाहर्तुमहं यतिष्ये ।
स्वस्त्यस्तु ते निर्गलिताम्बुगर्भं शरद्घनं नार्दति चातकोऽपि ॥

रघुः—आः ऋषिवर्य ! नैवं वक्तव्यम् । नहि कदाचित् निराशतां गता अद्यावधि अस्मत्सकाशादर्थिजनाः । तत् कथमद्य भवन्तमेव परावर्त्य कुले कलङ्कभाजनं भविष्यामि । तद् अविशङ्कं प्रकाश्यतामागमनप्रयोजनम् । मृण्मयपात्राऽवशिष्टोऽपि अहं भवत्समीहितपूर्तये प्रयत्नमाचरिष्यामि ।

गुर्वर्थमर्थी श्रुतपारदृश्वा
रघोः सकाशादनवाप्य कामम् ।
गतो वदान्यान्तरमित्ययं मे
मा भूत् परीवादनवावतारः ॥

कौत्सः—राजन् ! इदानीं समाप्तो मे ब्रह्मचर्यकालः । अवसरश्चायं गृहाश्रमे प्रवेशाय । तदेकदा गुरुदक्षिणायै मया भृशं समभ्यर्थिता गुरवः । परं मदीयां गुरुभक्तिमेव ते बहु मन्यमाना न काञ्चिदन्यां गुरुदक्षिणा

स्वीकृतवन्तः। परन्तु ममैव आग्रहातिशयेन जातरोषैस्तैः—"मत्तः चतुर्दशविद्या अधीतवानसि, अतः चतुर्दशकोटिमिताः स्वर्णमुद्रा आनय" इति अहं सकोपं समादिष्टोऽस्मि।

रघुः—आं ज्ञातम्। नहि एतावतः स्वल्पवित्तस्य कृते चिन्तनीयं अन्यत्र वा गमनीयं महाभागैः। केवलं द्वित्राणि दिनानि मम यज्ञशालायां अतिवाहनीयानि। तावदहं भवतो मनोरथपूर्तये प्रयत्नं करोमि।

कौत्सः—यथाह महाराजः।

कौत्सः गच्छति।

रघुः—(मन्त्रिभिः सह) अमात्यवर्याः! मया तु विजययात्रायां लब्धा निखिलापि सम्पत्तिः विश्वजिद्यज्ञे समर्पिता ब्राह्मणेभ्यो दीनजनेभ्यश्च। तदिदानीम् एतावत्-स्वर्णमुद्राग्रहणाय धनाधिपतिः कुबेर एव वरणीयः प्रतिभाति अस्माकम्। तद् भवन्तः सर्वेऽपि प्रातःकाले अलकापुरी—गमनाय सुसज्जिता भवन्तु इति।

मन्त्रिणः—यथा आदेशो महाराजानाम्।

( सर्वे गच्छन्ति। पटाक्षेपः )

## चतुर्थं दृश्यम्

( मध्ये राजा, पार्श्वयोः मन्त्रिणः सेनापतयश्च अलकापुरीगमनाय नृपादेशं प्रतीक्षमाणाः तिष्ठन्ति )।

प्रधानसचिवः—महाराज! ननु सर्वेपि सुसन्नद्धा वयं भवदादेशं प्रतीक्षामहे। अतिक्रामति च मौहूर्तिकप्रवरैरादिष्टा अभियानवेला। तद् अलमतिविलम्बितेन।

कोशाध्यक्षः—( साश्चर्यम् ससम्भ्रमं च प्रविश्य ) महाराज! अलमलम् अभिप्रयाणेन। प्रस्थानात् पूर्वमेव भवतां रिक्तो राजकोशः सम्प्रति असंख्यस्वर्णमुद्राराशिभिः परिपूर्णोऽवलोक्यते।

रघुः—( साश्चर्यम् ) एवं, तर्हि महदाश्चर्यमिदम्।

प्रधानमन्त्री–महाराज ! न खलु आश्चर्यमिदं त्रिभुवनविख्यातपराक्रमप्रभावस्य भवतः। तन्मन्यामहे महाराजभयात् पूर्वमेव नीतिनिपुणेन गुह्यकपतिना पातितोऽयं वित्तराशिः कोशागारे।

रघुः—भवितुमर्हति एतत्। अयं च किल महतः आनन्दस्य विषयो यत् परिपूर्णः सम्प्रति ऋषिवर्यस्याभिलाषः मदीया प्रतिज्ञा च। तदाहूयतां सम्प्रति तपस्विवरः कौत्सः। ( दूतं प्रति ) जीवक ! आनीयतां सम्प्रति ससमादरं यज्ञशालातो ब्रह्मचारिवर्यः कौत्सः।

( दूतः गच्छति कौत्सं च प्रवेशयति )

रघुः—( कौत्सं प्रति ) आगम्यतां भगवन् ! भवत्प्रसादात् अनायासमेव समुपलब्धो मया महान् धनराशिः। तदिदं सर्वमपि वित्तजातं भवद्भिरेव ग्रहीतव्यम्।

कौत्सः—महाराज ! नहि मे अधिकस्य धनस्य प्रयोजनं किमपि। विद्या तपः त्याग एव च अस्माकं ब्राह्मणानां प्रधानं धनम्। अहं तु केवलं गुरुदक्षिणायै चतुर्दशकोटीः एव स्वर्णमुद्रा आनेतुं समागतोऽस्मि। ततोऽधिकां एकामपि मुद्रां ग्रहीतुमसमर्थोऽस्मि।

सभासदः—अहो ! धन्यं धन्यम्। धन्यवादार्हा उभयेऽपि महापुरुषाः। यथा याचितादधिकस्य दातारो महाराजा धन्यवादार्हाः तथैव प्रयोजनादधिकस्य अग्रहीतारो ब्रह्मचारिवर्या अपि धन्यवादार्हाः।

कौत्सः—राजन् ! सम्प्रति परिपूर्णो मे मनोरथः। तदहं गुरुवर्याणामन्तिके गुरुदक्षिणां समर्पयितुं गन्तुमिच्छामि। विजयतां निखिलेऽपि महीमण्डले भवतां कीर्त्तिपताका। किमधिकं कथयामि—

आशास्यमन्यत् पुनरुक्तभूतं
श्रेयांसि सर्वाण्यधिजग्मुषस्ते।
पुत्रं लभस्वात्मगुणानुरूपं
भवन्तमीड्यं भवतः पितेव॥

( निष्क्रान्तः कौत्सः। पटाक्षेपः। )

## पञ्चमं दृश्यम् ।

( स्थानम्—महर्षिवरतन्तोराश्रमः )

**वरतन्तुः**—( चिन्तानिमग्नः स्वगतम् ) अहो, अतिशयेन दुर्निवाराः खलु कामक्रोधादयो विकाराः, येन तपस्विनोऽपि जनाः कदाचित् अनायासेनैव विपथगामिनः क्रियन्ते । कौत्सस्य गुरुदक्षिणाविषयिणी प्रार्थना तु सर्वथा समुचितैव आसीत् । परं मया न स्वीकृता, कोपावेश-निष्ठुरेण च चतुर्दशकोटिमितानां सुवर्णमुद्राणामानयनाय कठोरतरा आज्ञा प्रदत्ता । तत् न जाने इतः कुत्र गतवान् कौत्सः ? कुतश्च तेन एतावत्यः स्वर्णमुद्रा लप्स्यन्ते । अलभमानश्च किं करिष्यति, कुत्र गमिष्यति, कां कां वा कष्टां दशां सहिष्यते ? नानाविधान् क्लेशान् सहमानश्च किं वा विचारयिष्यति मद्विषये ? अहो ! वृद्धस्यापि मे एतावान् व्यामोहो यत् स्वल्पापराधेन एतावति महासंकटे पातितोऽसौ प्रियवत्सः । तत् किं करोमि ? क्व गच्छामि ? कुतश्च तस्य स्वल्पमपि कुशलवृत्तान्तम् उपलभेय ?

**ब्रह्मचारिणः**—( धावन्तः समागत्य ) अलमलं चिन्तया विषादेन च । समागतोऽसौ अस्माकं प्रियसखा कौत्सः । प्रसन्नमानसश्च महता धनराशिना सह इत एव गुरुचरणानामन्तिके समागच्छति । तत् प्रसीदन्तु भवन्तश्चिन्ताविरहिताः सम्प्रति ।

**लघुब्रह्मचारी**—( नेपथ्याभिमुखम् अवलोक्य ) अवलोक्यताम् । एष समागत एवाऽयम् ।

**वरतन्तुः**--(सहर्षम्) अहो समागतः कौत्सः ! (अवलोकनाय ससम्भ्रममुत्तिष्ठति )

( कौत्सः गुरुचरणयोः प्रणिपतति )

**वरतन्तुः**--( कौत्सं हस्तेन उत्थाप्य शिरसि करं निधाय च ) वत्स ! आयुष्मान् भव ! अपि सकुशलं समागतोऽसि ?

**कौत्सः**--गुरुचरणानामनुग्रहेण सर्वथा सकुशल एव समागतोऽस्मि ।

**वरतन्तुः**—( स्नेहं निरूपयन् ) वत्स ! कथय, इतो मया निर्दय-माज्ञापितः कुत्र गतवानसि ? किं किं कष्टं सोढवानसि ? कुतश्च एतावन्तं धनराशिं समानीतवानसि ?

**कौत्सः**—गुरुवर्याः ! इतोऽहं महाराजस्य रघोः सकाशं गतवानस्मि तत एव च इमाश्चतुर्दशकोटिमिताः स्वर्णमुद्रा आनीतवानस्मि । परन्तु नहि खलु इदं मम पुरुषार्थस्य फलं प्रत्युत श्रीचरणानां कृपाया एव अयं प्रभावः अस्ति । गुरुकृपायाः प्रभावेण सुदुर्लभमपि वस्तु सुलभं सम्पद्यते शिष्याणाम् ।

**वरतन्तुः**–प्रिय वत्स ! अतितरां प्रसन्नोऽस्मि तवानेन बुद्धिकौशलेन पुरुषार्थेन च । एतादृशा एव पुरुषाः संसारे असम्भवमपि सम्भवं कुर्वन्ति, अमङ्गलमपि मङ्गलमयं सम्पादयन्ति, कण्टकाकीर्णमपि च पन्थानं कुसुमसुकुमारं विदधति । इदानीं त्वं वस्तुतः संसारभार-निर्वाहक्षमः संवृत्तोऽसि इति मे निश्चयो जातः । तत् समावर्तनविधिं सम्पाद्य सानन्दं गृहं गच्छ, दारपरिग्रहं च विधाय त्रिवर्गसाधनं सम्पादय । अपरं च इदमपि कदापि न विस्मरणीयं यत् ब्राह्मणकुले प्रसूतोऽसि ।—

ब्राह्मण्यं बहुभिरवाप्यते तपोभिः
तल्लब्ध्वा न रतिपरेण हेलनीयम् ।
स्वाध्याये तपसि दमे च नित्ययुक्तः
क्षेमार्थी कुशलपरः सदा यतस्व ॥

( कौत्सः नतेन शिरसा शुभाशिषो गृह्णाति )

**वरतन्तुः**—( जनताभिमुखम् ) अपि च इदमहं पुनर्भगवन्तं भूत-भावनमभ्यर्थये—

आदेशकारिणः शिष्याः गुरवः शिष्यवत्सलाः ।
स्नातकाः सच्चरित्राश्च सन्तु सर्वत्र भूतले ॥

सर्वे गच्छन्ति । पटाक्षेपः ।

# नाटक का हिन्दी में संक्षिप्त रूप

इस नाटक का कथाभाग महाकवि कालिदास प्रणीत रघुवंश महाकाव्य के पाचवे सर्ग से लिया गया है। नाटक की संक्षिप्त कथा निम्नलिखित है—

**प्रथम दृश्य**—नाटक के प्रधान पात्र ब्रह्मचारी कौत्स समावर्तन हो जाने पर शास्त्रानुसार अपने गुरु ऋषि वरतन्तुको गुरुदक्षिणा देने का विचार करते हैं और गुरु के समीप आकर प्रणामपूर्वक उनसे गुरुदक्षिणा स्वीकार करने के लिये प्रार्थना करते हैं। ऋषि, कौत्स की अब तक की अविचलित गुरुभक्ति पर ही प्रसन्नता प्रकट करते हुए गुरुदक्षिणा लेने से अनिच्छा प्रकट करते हैं। इस पर कौत्स गुरुदक्षिणा लेने की स्वीकृति के लिये ऋषि से बार बार आग्रह करते हैं। अन्त में ऋषि क्रुद्ध होकर कौत्स को आज्ञा देते हैं कि "जाओ, हमने तुम्हें चौदह विद्याओं को पढ़ाया है अत: १४ करोड़ स्वर्ण की मुद्रायें ले आओ"। कौत्स विस्मय के साथ इस आज्ञा को सुनते हैं, दृढ़ता के साथ उसे स्वीकार करते हैं और ऋषिको प्रणाम कर वहाँसे उठते हैं। अंतमें अपने आग्रह पर पश्चात्ताप करते हुए अयोध्याके महाराज रघुके समीप जाकर गुरुदक्षिणा माँगने का निश्चय करते हैं और चले जाते हैं।

**द्वितीय दृश्य**—महाराज रघु अपने कुलगुरु बशिष्ठ, मंत्रीगण तथा सभासदोंके साथ बैठे है और अपने विश्वजित् यज्ञकी पूर्णताके लिये अपने राज्यकी समस्त सम्पत्तिका दान कर देने के लिये ऋषि वशिष्ठसे सम्मति लेते हैं। ऋषि वशिष्ठ इस प्रस्तावका समर्थन करते हैं और महाराज रघु मन्त्रीको सर्वस्व दानके लिये—यहाँ तक कि अपने सुवर्णमय जलपात्रको भी दे देनेके लिये—आदेश देते हैं। इसी वीच द्वारपाल आकर कौत्सके आगमनकी सूचना देता है। महाराज के आदेशानुसार कौत्स आते हें और प्रणाम-आशीर्वाद तथा कुशल-प्रश्नके पश्चात् महाराज कौत्सके आगमन का प्रयोजन पूछते हैं। कौत्स महाराजके हाथमें मिट्टीका पात्र देखकर हतोत्साह होते हैं और अपने आगमन का प्रयोजन कहने से अनिच्छा प्रकट

करते हैं। परन्तु महाराज के आग्रह पर पुनः अपना प्रयोजन कहते हैं और महाराज उन्हें आश्वासन देते हैं कि "आप हमारी यज्ञशाला में २-३ दिनों तक ठहरें, मैं आपकी अभिलाषा पूर्ण करने का प्रयत्न करूँगा"। कौत्स यह प्रसन्नता के साथ सुनकर चले जाते हैं। तत्पश्चात् महाराज रघु मन्त्रियों से अलकापुरी पर आक्रमण कर कुबेर से धनराशि प्राप्त करने के लिये विचार और निश्चय करते हैं।

**चतुर्थ दृश्य**—मन्त्री महाराज को अभियान के समय की सूचना दे रहे हैं तब तक कोषाध्यक्ष अपने रिक्त कोश के पुनः स्वर्णमुद्रा से भर जाने का समाचार सुनाते हैं। इस पर सब को आश्चर्य होता है और महाराज कौत्स को बुलाकर उन्हें सब स्वर्णमुद्रायें समर्पित करते हैं। परन्तु कौत्स केवल चौदह करोड़ स्वर्णमुद्रा लेकर तथा महाराज को पुत्रोत्पत्ति के लिये आशीर्वाद देकर ऋषिकुल के लिये प्रस्थान करते हैं।

**पञ्चम दृश्य**—ऋषि वरतन्तु अकेले बैठे हुए क्रोध में कौत्स को कठोर आज्ञा देने के लिये पश्चात्ताप कर रहे हैं और कौत्स का कुशल-समाचार जानने के लिये चिन्तित हैं। इसी बीच ब्रह्मचारी दौड़ते हुए आते हैं और कौत्स के आगमन की सूचना ऋषि को देते हैं। ऋषि कौत्स को देखने के लिये उत्सुकता से उठते हैं और कौत्स को देखकर तथा उन्हें आशीर्वाद देकर कुशल-प्रश्न करते हैं। अनन्तर कौत्स अपना सब वृत्तान्त सुनाते हैं और गुरुदक्षिणा अर्पित करते हैं। ऋषि कौत्स के इस साहस और पौरुष पर अत्यन्त प्रसन्नता प्रकट करते हैं और उन्हें आशीर्वाद देकर गृहस्थाश्रम में प्रवेश करने की आज्ञा देते हुए कर्त्तव्यपालन की ओर निर्देश करते हैं। कौत्स आशीर्वाद लेकर चले जाते हैं और ऋषि वरतन्तु भरतवाक्य के रूप में अन्त में अपनी शुभकामना प्रकट करते हैं।

**सूचना**—इस नाटक का अभिनय आरम्भ करने के पहले इस संक्षिप्त कथा को सुना देना चाहिये जिससे दर्शकों को कथा का परिचय प्राप्त हो जाय और उन्हें संस्कृत के समझने में सुविधा हो।

●

# संस्कृत प्रेमियों से

यदि आप सरलता, शीघ्रता और मनोरंजन के साथ घ
बैठे संस्कृत सीखना चाहते हैं,

यदि आप संस्कृत के सरल-सरस गद्य-पद्यों के अध्यय
का आनन्द लेना चाहते हैं,

यदि आप अपने बाल-बच्चों में बचपन से ही शिक्षा एव
शुभ-संस्कार के भाव भरना चाहते हैं,

यदि आप संस्कृत के गीत, हास्य, अभिनय एवं कविता-
पाठ द्वारा मनोरंजन करना चाहते हैं,

यदि आप अपने भवन एवं कार्यालय को संस्कृत की उत्त
मोत्तम सूक्तियों से अलंकृत करना चाहते हैं, और

यदि आप अपने घर एवं परिवार में संस्कृत एवं शु
संस्कार का वातावरण बनाना चाहते हैं, तो

कार्यालय द्वारा प्रकाशित पुस्तकों तथा पोस्टरों को मँ
कर अपनी अभिलाषायें पूर्ण करें। कृपया सूची-पत्र के लि
आज ही पत्र लिखें—

व्यवस्थापक-
सार्वभौम संस्कृत-प्रचार कार्यालय
डी० ३८/११०, हौजकटोरा,
वाराणसी

